# मेघदूतम्

(दृश्यकाव्यम् )

निबन्धक:- श्रीनित्यानन्दस्मृतितीर्थ:

## प्रथमाङ्क:

### प्रथमदृश्यम्--तोररराम्

नान्दी- व्रजपुररमणीनां चित्तचोर: स गोपो
रसरभसविमुग्धा रासमध्ये विमुच्य ।
पुनरित इह गोपीर्विरहक्लेशशान्त्यै
व्यपनयतु स चित्ताद् दु:खभारं हरिर्व: ।।

अपिच--

नवजलधरकान्तिर्भाति य: सूर्य्यभासा
विविधकृतिनिमग्न: कर्म्महीन: सदैव ।
तरुणवयसि येनानुष्ठितं भीमकर्म्म
निखिलगुणयुतो यं सर्व्वदा व: स पायात् ।।

(तत: प्रविशति सूत्रधार:)

सूत्रधार:- अये । अभिमतजनभूयिष्ठेयं परिषद् । तत्, कथं हीन-सम्पदहं अभ्यर्थये इमाम् । (चिन्तां नाटयति) भवतु सर्व्व-कर्म्मसहायभूतां प्रियां तावद् आह्वयामि । यत:

पत्यौ विपदमापन्ने समैव सा विपत् स्त्रिया: ।
सम्पन्ने सा च सम्पन्ना तस्माद्धर्ध्दहरा स्मृता ।।
अयि प्रिये । आगच्छ शीघ्रम् ।

नटी (प्रविश्य) नाथ । आमन्तेसि मं ? (नाथ आमन्त्रयसि माम्)

सूत्र- प्रिये । अथ किम् ?

नटी- कधं पिअ । (कथं प्रिय ।)

सूत्र- प्रिये । पश्य, अस्माकं बहुभाग्यवशात् कीदृशी परिषत् सम्मिलितास्मिन् गेहे ।

क्रमश:------२

नटी- नाध । न एत्थ सोहग्गं, अवि अ दुब्भग्गं एव्व केवलं ।
(नाथ । नात्र सौभाग्यं, अपि च दुर्भाग्यमेव केवलम् ।)

सूत्र- अयि । पश्य-

अव्यक्ते न्यस्तचित्ता विषयरतिमिह त्यक्तवन्त: सदा ये
ये श्रौतस्मार्त्तकृत्यां दृढनिहितचित: स्वेष्टसिद्ध्यै धरायाम् ।
ये विद्याख्यातिमाप्ता विबुधपरिषद:, सम्पदा शोभिता ये
ते सर्वे सगता भो । भवनगुणाकरा: केवलं भाग्यतो न: ।।

तत्, किमत्र दौर्भाग्यं दृश्यते त्वया ।

नटी- अज्ज । पूज्जाणं अब्भथने न दुब्भग्गं भणिदं मए । ता, अस्सिं समए तारिसाणं अब्भत्थणं त्ति दुब्भग्गकालणं मए भणिदं येदो ।

गेह्वन्ति समए देवा पूअनं मत्तवासिनं ।
अआले न क्खु दे तुट्टा पूणाअत्र गेहमेधिनं ।।

(आर्य्य । पूज्यानामभ्यर्थने न दुर्भाग्यं भणितं मया । तदस्मिन् समये तादृशामभ्यर्थनमिति दुर्भाग्यकारणं मया भणितम् । यत:

गृह्वन्ति समये देवा: पूजनं मर्त्यवासिनाम् ।
अकाले न खलु ते तुष्टा: पूजया गेहमेधिनाम् ।।)

सूत्र- भद्रे । कथम् अकाल इत्युच्यते ।

नटी- णं किंपि भणामि मइ विमुहस्स तुह सआसे ।
(किमपि भणामि मयि विमुखस्य तव सकाशे ।)

सूत्र- अनुरक्तया वियुक्तो हं त्वया दृष्ट: कथचंन ।
विमुखेति समाभाष्य तापो यद् दीयते प्रिये ! ।।

नटी- नाध । एव्वं भणामि, पेक्खदु पेक्खदु भवं नूदनो मेहो व्वजबहूणाध इव आलिंदि विजुदं, आलिंगनसुहहासो आलोरणं संविभादि इमानं । ता नाध । इमस्सिं समए किंपि कज्जं किं सुहअरं भवे ?

क्रमश:-----३

(नाथ । एवं भरामि-प्रेक्षतां भवान् नूतनो मेघो व्रजवधूनाथ इव आलिंगति विद्युतम् । आलिंगनसुखहास आलोकेन संविभाति अनयोः । तत्, अस्मिन् समये किमपि कार्य्यं किं सुखकरं भवेत् ।)

सूत्र- सत्यमेव भरासि । किन्तु प्रिये । कर्त्तव्यभारग्रस्तानाम् अस्ति किं सुखभोगावसरः ? पश्य-

प्रियया कृष्टचित्तो पि प्रभुकर्म्मप्रपीडितः ।
यथा भवति यक्षो यं तथास्मि सर्व्वथा प्रिये । ।।

(निष्क्रान्तौ)

------ooo-------

द्वितीयदृश्यम्-

अलकायां धनपतेर्दीर्घिकातीरम्

(तत्रावतिष्ठते दीर्घिकारक्षी यक्षः)

यक्षः- अहो ! परवशजीवनं कीदृग् दुःखकरम् । तस्मिन् प्रातरागतवतो पि मे अधुना सकृदपि गमनस्य नास्त्युपायः प्रियासकाशे । न जाने अधुना सा किमनुतिष्ठति । निश्चितमेवाधूना-

रचयति शुभमालां मत्कृते चातिशोभां
नवनवकवितां वा प्रीतये मे विधत्ते ।
घटयति सुखशय्यां भाषितुं गुप्तभाषां
गणयति समयं सा व्याकुला चातिलोला ।।

अहमत्र मन्दभाग्यः-

तिष्ठामि दीर्घिकारक्षी दासः परवशः सदा ।
तत्कथाचिन्तनस्यापि नास्त्युपायः कथचन ।।

अहो विधे । कीदृशस्ते विचारः ।

बहुधनपरियुक्तः भुज्यते को पि देही
विकरुणहृदयेन क्लिश्यते तेन भृत्यः ।
अनुभवति सुखं भोः सर्व्वदा सर्व्वतो यं
न परसुखविधाने तस्य दृष्टिः कथचित् ।।

क्रमशः-----४

यदि न तथा स्यात्, तर्हि कथम्-

अहं क्लिष्टो स्मि बहुधा प्रियाविरहित: सदा ।
क्लेशस्येच्छा त्यजत्येनं मृत्युर्मृत्युंजयं यथा ।।

अथवा, को त्र ते दोष: । मन्दं भाग्यं कृतं मयैव । यत:

स्वीयकर्म्मार्ज्जितं भाग्यं सर्व्वदा भुज्यते जनै: ।
मोहप्राप्तै:सदा तैश्च दोषभाक् क्रियते विधि: ।।

यातु तत्, अधुना प्रिया मे किमनुतिष्टति । निश्चितमेव सा मत्प्रत्यागमनाशया द्वारि सोत्कराठावतिष्ठते ।

नृपपथमवलोक्यान्विष्यते जीवितेशो-
भुवनसकलशब्दै: शंक्यते पादशब्द: ।
पतिगतिमभिशङ्क्य प्रेक्षते पान्थसङ्घं
न तु परिगतकामापेक्षमाराापि साध्वी ।।

विधिप्रवचिते । दौर्भाग्येराौव मया तव परिाायो विहित: ।

अन्यथा-

सकलगुराायुता त्वं दासभार्य्या कथं स्या:
यदि च नृपतिजाया दु:खलेश: कुतस्ते ।
भवति विरहचित्ते वैरही वेदना च
हत विधिविहिताद् भो दासभार्य्या स्मृताघ ।।

अये कस्य शब्द: श्रूयते । (पश्यति) अहो । हा । हा । मत्तमातंगेन ध्वस्तं पद्मवनम् । यस्य कृते नियुक्तो हं प्रभुराा । अहो । ममैव अनवधानतया वृत्तमिदं सङ्घटितम् । किमत्र प्रतिविधास्ये । न जाने वृत्तान्तमिममवगत्य किं विधास्यति भर्त्ता ।

(तत: प्रविशति यक्षराज: कुबेर: ।)

कुबेर:- भगवन् । सर्व्वेश्वर । कर्म्मविधायक । शम्भो । तवाशेष-
करुराााप्रभावेन लब्धमिदमैश्वर्य्यम् । तथाहि-

देव: कारुरायमूर्त्ति: सकलशुभविधौ यत्नशील: सदा स
मूर्त्या हीनस्तथापि स्तुतिपरिमहितो मूर्त्तिमान् भक्तहेतो: ।
उत्पत्तिर्नास्ति शम्भोस्तदपि घृतवपु: केवलं लीलयैव
कार्य्याभावे पि देवश्चरति बहुकृतिं सर्व्वदा लोकहेतो: ।।

भवति सरलपूजा शङ्करस्यातिहृद्या
नियमजपरिखेदो नेष्यते शङ्करेरा ।

क्रमश:----५

चरति हृदयसौख्यं केवलं विल्वपत्रं
हरिचराजवारि प्रीतिदं शंकरस्य ।।

अपि च-

भूताधीशो भवति सततं रोषहीन: स देवो
भक्तै देयं किमपि न भवेदाशुतोषस्य तस्य ।
नीलग्रीवो भुवनभयदं कालकूटं प्रगृह्य
सर्वाभीष्टं स चरितुमलं प्रार्थितो भक्तवृन्दै: ।।

अहो । विचित्रं विधानं देवस्य ।

सर्व्वंशिवस्य सन्दाताप्यशिवां मूर्त्तिमास्थित: ।
संसारसुखदाताऽपि श्मशानभवन: स्वयम् ।।

अपि च-

योगिभिर्युज्यमानो पि योगयुक्त: कथं प्रभु: ।
ध्यातृणां ध्यानगम्यो पि ध्यानासक्त: स्वयं शिव: ।।

तेनैव देवेन आदिष्टो स्मि वत्स । तव दीर्घिकापद्म-
कुसुमेन मां पूजयेति । कारुण्यपरवशेन तेनैवेशेन मह्यं दत्तं
सर्व्वैश्वर्य्याधिपत्यम् । तद्दीर्घिकापरिरक्षणाय नियुक्त: कश्चि-
न्नवीनो यक्ष: । तद् यावत् पश्यामि । (दूरतो दीर्घिकां
विलोक्य) इयं सा दीर्घिका, यत्र हि-

वारि स्फटिकवत् स्वच्छं देवानुग्रहत: सदा ।
वासे पि जलजन्तूनां स्नानं सुखकरं स्मृतम् ।।

अपि च-

यत्र मनोरमं पद्मं शंकरप्रीतये स्थितम् ।
गन्धो मनोहरो यस्य विस्तृतो दिक्षु सर्व्वत: ।।

कथं न तथा दृश्यते शोभा पद्मवनस्य (निपुणं निरुप्य)
किं भग्नं पद्मवनम् ? अरे यक्ष । किमेतत् ?

यक्ष

यक्ष:- स्वामिन् । श्रूयताम् ।
कुबेर:- नास्ति बहु श्रोतव्यम् । संक्षेपेणोच्यताम् ।
यक्ष:- देव । सहसा कश्चिन् मत्तमातंगो त्र प्रविश्य कृतवानेवम् ।
कुबेर:- अरे मूढ । मत्तमातंगेन भग्नमिति मे अपगतो दु:खराशि: ?

क्रमश:---६

कथं स न ताडितस्त्वया ।

यक्ष:- तिष्ठ रे वाचाट । त्वया ताड्यमानेनापि तेनवं कृतमिति

बोधयसि माम्, अरे धूर्त । किं मूर्ख इति मां मन्यसे ।

त्वत्त: प्रहारमाप्तो पि मातंग: कृतवानिति।

सम्भाव्यं विषये स्मिन् भो: ! स्वयमेव विचिन्त्यताम् ।।

हा हा किमधानुष्ठितं त्वया ।

सर्व्वैश्वर्य्यप्रदातुर्मे विधातु: सुखसम्पदाम् ।

प्रीतिहेतो: कृतं यद् भो: । सर्व्वं तन्नाशितं त्वया ।।

शृणु रे मूढ़ ।

शास्तिर्भोग्या तव सुमहती नाशहेतोर्वनस्य

ज्ञानैर्हीन । स्वकृतिविरहिन् । वर्षमेकञ्च यावत् ।

कान्ताहीनो वस विरहितो रामगिर्य्याश्रमे त्वम्

वर्षे पूर्णे पुनरिह गति: शोभिते स्याद् पुरे स्मिन् ।।

गच्छामि तावद्देवं प्रसादयितुम् । (निष्क्रान्त: )

यक्ष:- हा हा देव । रक्ष रक्ष माम् ।

क्रियतां प्राणदण्डो मे तथापि नास्तिमे व्यथा ।

सर्व्वं त्यक्त्वा प्रवासे हा कथं धास्यामि जीवितम् ।।

हा हा राजन् । तव चित्ते दयालेशो पि नास्ति । कथं वा

तत् सम्भवति ।

त्वमसि सुखनिमग्नो बुध्यसे मद्व्यथां किं-

मृमृतरसनिमग्नैर्ज्ञायते किं प्रदाह: ।

अनुभवितुमशक्तो वित्तवान् दीनपीड़ां

यदि न भवति राजन् ! किं दशा स्यान्न ममैवम् ।।

किं करोमि । एष गच्छामि मन्दभाग्य: ।

भूमिर्मातृसमा दिव: सुखकरी त्याज्या भवेदद्य मे

ये मे प्रीतिकरा: क्षितौ सखिगणास्ते चापि हीना मया ।

कान्ता जीवतुला गृहे विरहिता पत्या विधे । सर्व्वत

इत्थं दु:खमितं तथापि हृदयं स्थैर्य्यं गतं केन मे ।।

(तत: प्रविशति विसंष्ठुलवेशा यक्षपत्नी)

क्रमश:----७

यक्षपत्नी- नाथ ! नाथ ! मम जीवितेश्वर । कुत्र वर्त्तसे । प्राणे !
स्वामिन् । त्वदेकालम्बनीभूता दयिता परित्यज्य न गन्तव्यम् ।

यक्ष:- कथं तपस्विनी अत्रैवागच्छति । किं करोमि ।

यक्षपत्नी- नाथ ! कथं न दीयते मे प्रतिवचनम् ।

यक्ष:- कथमत्रागतैव । हा विधे । कथमत्रापि त्वया वञ्चितो स्मि ।

यक्षपत्नी- सखे । किमपराद्धं मया यतो न ददासि मे प्रतिवचनम् ।
(उपसृत्य) अये । अत्रैव तिष्ठति मम हृदयनाथ: । नाथ ।
आगच्छ गेहम्, त्वत्कृते च ग्रथिता मनोहारिणी माला ।

यक्ष:- हतभाग्ये । नास्त्यद्य मे त्वया ००० भाषणास्याप्यधिकार: । दरिद्रार
कृता भिप्रायसिद्धि: । यत: सर्व्वदैव ते पराधीना भवन्ति ।

यक्षपत्नी- प्रिय वयं दरिद्रा एव वर्त्तमहि । तेन का क्षति: । प्रेमराग
प्रीत्या च रचयाम: स्वर्गादप्यधिकं सुन्दरभवनम् ।

यक्ष:- प्रिये । मम प्राणप्रतिमे । तन्न सम्भवति । तस्मात् प्रति-
निवर्त्तस्व गेहे ।

यक्षपत्नी- स्वामिन ! कथं तत् सम्भवति । त्वया विना कथं वसामि गेहे ।

यक्ष:- किन्तु प्रिये ! नास्त्यत्र अन्य: को प्युपाय: ।

यक्षपत्नी- नाथ । यदि त्वया अवश्यमेव गन्तव्यं, तर्हि अहमपि त्वामनु-
सरामि ।

यक्ष:- तपस्विनि । राजादेशेन तदपि न सम्भभति ।

यक्षपत्नी- प्रियतम कथ्यताम् अत्र राज्ञ आदेशदानस्य को धिकारो
वर्त्तते । पश्य-क: शक्नोति छायया सूर्यं वियोजयितुं
चन्द्रिकया चन्द्रं वा ।

यक्ष:- प्रिये ! ते पि यदि पराधीना भवेयु:, तदा तेषामपि तदवस्था
सम्भवति । दासभार्य्ये । गम्यतां स्वभवनम् । नास्ति काल-
क्षेपस्याप्यवसर: । गम्यताम् । यावदहमपि गच्छामि ।
(गन्तुमुद्यत: )

यक्षपत्नी- यथा तथा भवतु । अहं त्वामनुगच्छाम्येव । (अनुगन्तुमुद्यता)

यक्ष:- हा प्रिये ! कथमपि तन्न सम्भवति । (निवारयति)

क्रमश:----८

यज्ञपत्नी- नाथ ! नाथ ! मम जीवितेश्वर । कुत्र वससि । प्रभो !
स्वामिन् । त्वदेकालम्बनीभूता दयिता परित्यज्य न गन्तव्यम् ।

यज्ञ:- कथं तपस्विनी अत्रैवागच्छति । किं करोमि ।

यज्ञपत्नी- नाथ ! कथं न दीयते मे प्रतिवचनम् ।

यज्ञ:- कथमत्रागतैव । हा विधे । कथमत्रापि त्वया वञ्चितो स्मि ।

यज्ञपत्नी- सखे । किमपराद्धं मया यतो न ददासि मे प्रतिवचनम् ।
(उपसृत्य) अये । अत्रैव तिष्ठति मम हृदयनाथ: । नाथ ।
आगच्छ गेहम्, त्वत्कृते च ग्रथिता मनोहारिणी माला ।

यज्ञ:- हतभाग्ये । नास्त्यद्य मे त्वया ~~उदद~~ भाषणास्याप्यधिकार: । दरिद्राणा
कृता भिप्रायसिद्धि: । यत: सर्व्वदैव ते पराधीना भवन्ति ।

यज्ञपत्नी- प्रिय वयं दरिद्रा एव वर्त्तामहि । तेन का हानि: । प्रेमणा
प्रीत्या च रचयाम: स्वर्गादप्यधिकं सुन्दरभवनम् ।

यज्ञ:- प्रिये । मम प्राणाप्रतिमे । तन्न सम्भवति । तस्मात् प्रति-
निवर्त्तस्व गेहे ।

यज्ञपत्नी- स्वामिन ! कथं तत् सम्भवति । त्वया विना कथं वसामि गेहे ।

यज्ञ:- किन्तु प्रिये ! नास्त्यत्र अन्य: को प्युपाय: ।

यज्ञपत्नी- नाथ । यदि त्वया अवश्यमेव गन्तव्यं, तर्हि अहमपि त्वामनु-
सरामि ।

यज्ञ:- तपस्विनि । राजादेशेन तदपि न सम्मभति ।

यज्ञपत्नी- प्रियतम कथ्यताम् अत्र राज्ञ आदेशदानस्य को धिकारो
वर्त्तते । पश्य-क: शक्नोति छायया सूर्य्यं वियोजयितुं
चन्द्रिकया चन्द्रं वा ।

यज्ञ:- प्रिये ! ते पि यदि पराधीना भवेयु:, तदा तेषामपि तदवस्था
सम्भवति । दासभार्य्ये । गम्यतां स्वभवनम् । नास्ति काल-
क्षेपस्याप्यवसर: । गम्यताम् । यावदहमपि गच्छामि ।
(गन्तुमुद्यत: )

यज्ञपत्नी- यथा तथा भवतु । अहं त्वामनुगच्छाम्येव । (अनुगन्तुमुद्यता)

यज्ञ:- हा प्रिये ! कथमपि तन्न सम्भवति । (निवारयति)

यक्षपत्नी- (रोरुधमाना) नाथ ! त्वया विना कथं वसामि तद्गेहे ।
तद् भवनं सर्वत: श्मशानप्रायमेव संवृत्तम् । हा भगवन् ।
कथं मम ईदृशं भाग्यम् (मोहमागता)

यक्ष:- (निरीक्ष्य किं मोहमागता तपस्विनी । आं, इदं युक्तमेव
संवृत्तम् मम । दासानाम् एतदन्यत् किं सम्भवति । अधुना
किं कर्त्तव्यम् ? अस्या: संज्ञालाभाय यत्न: कार्य्य: । न, न,
लब्धसंज्ञायामस्यां मद्गमने वाधा भविष्यति । किन्तु
किन्तु विसंज्ञायां वा कथं गन्तव्यम् । को वा वर्त्तते उपाय: ।
मयि स्थिते उभयोरेव प्राणान् नाशयिष्यति राजा । मयि
गते कथमपि जीवितुं शक्नुयान्मे प्रिया । अत एव गन्तव्यमेव
मया । प्रिये । तिष्ठ त्वम्, मन्दभाग्यो हम् गच्छामि ।
आशाबद्धा प्रतिदिनमितस्तिष्ठ गेहे त्वमेका
पत्या हीना विवशहृदया दु:खिचित्ता वस त्वम् ।
सौख्यै: शून्या तव करुणता भासतां सर्व्वदेहे
वर्षं यावत् सकलरहिता जीविता स्या ममाद्यराग: ।।

हा । त्वं सर्वथैव हतभाग्या । यदि तथा न स्यात्, तर्हि
कथं मया ते परिणायो विहित: । एषो हं कठिनहृदयो विसं-
ज्ञामपि त्वां परित्यजामि । त्वं सर्व्वथा वञ्चितासि ।
हा प्रिये ।

कुसुमनिचयबोधाद् दीप्तवह्निर्धृतो हि
सुखकरमधु मत्वा कालकूटञ्च पीतम् ।
मणिरिति गणयित्वा स्थापितो हि: स्वकण्ठे
न भवति यदि वेत्थं कान्तता मे कथन्ते ।।

किं करिष्यामि, त्वं जीवनं मृत्युं वा प्राप्नुहि, मम तु
गमनमशक्य-विलम्बनमेव । भगवन् । इमां अतिदीनां
तपस्विनीं रक्षतु भवान् । (निष्क्रान्त: ) ।

यक्षपत्नी- (शनै: शनैर्लब्धसंज्ञा) नाथ ! नाथ ! मम प्राणाधिपते ।
कथमपि तद् न भवितुमर्हति । त्वया विरहिता अहं जीवितु-
मपि न शक्नोमि । राजा क्रुध्यतु प्रसीदतु वा तेनावयोर्नास्ति
कापि क्षति: । आवां राज्यमेतत् परित्यज्य अन्यस्मिन्

कुत्रचित् स्थाने गमिष्याव: । दयित । कथं त्वं न किमपि वदसि ? किं मम प्रियसख: प्रस्थित: । न, न, तन्न भवितुमर्हति । मामकथयित्वा कथमपि जीवितेशो नैव प्रस्थास्यते । सखे । कुत्र तिष्ठसि, देहि मे प्रतिवचनम्, किं क्रीडसि ? चतुर । किमयं क्रीड़ावसर: ? अधुना क्रीड़नं तिष्टतु । त्वमागच्छ मत्समीपम् । नाथ । त्वा मपश्यन्त्या मम हृदयं स्फुटितप्रायं संवृत्तम् । किं अधुनापि नागच्छसि । अथवा दुर्भाग्यां मां विसृज्य स प्रस्थित: । पश्यामि, कुत्र गमिष्यति स: । अहमपि तेन सहैव गच्छामि ।

(इति यदा निर्व्वासिनं नाम प्रथमो क:) (क्रमश:)

-----०-----

इन्द्रियसाफल्यम्

श्रीताराप्रसन्नतर्कतीर्थकृतम्

१

नेयं नेत्रं हि साफल्यं निरीक्ष्य नीरदप्रभम् ।
त्रिभगं मुरलीवक्त्रं श्यामसुन्दरविग्रहम् ।।

२

कार्य्यंच कर्णसाफल्यमाकर्ण्य कृष्णकीर्त्तनम् ।
कृष्णभक्तिवरसार्द्रेण चेतसा साधुसंगिभि: ।।

३

विधेयं घ्राणसाफल्यं कृष्णाङ्घ्रितुलसीदम् ।
आघ्राय भक्तिभावेन श्वेतचन्दनसंयुतम् ।।

४

साफल्यं रसनायाश्च विधेयं भक्तिभावत: ।
विष्णुपादोदकं पीत्वा प्रसादास्वादनेन च ।।

५

त्वक्साफल्यं तथा कार्य्यं प्रसार्य्यं बाहुयुग्मकम् ।
विष्णुभक्तांगमालिंग्य प्रेमभक्तिरसाप्लुतम् ।।

००००

क्रमश:-----१०

मेघदूतम्

निबन्धक: श्रीनित्यानन्दस्मृतितीर्थ:

(पूर्वानुवृत्तम्)

द्वितीयो क:

(वनपथ: । तत:प्रविशति पतिमन्वेषयन्ती यक्षपत्नी ।)

यक्षपत्नी । हा नाथ हा मदेकशरण । क्वासि, देहि मे प्रतिवचनम् । प्रभो । दारा तिष्ठ । एतादृक् शीघ्रतया न शक्नोमि गन्तुम् । प्रभो । किञ्चिदपेक्षस्व । कथं नापेक्ष्यते त्वया ? किं मया अपराद्धम् त्वत्समीपे, यत: परित्यजसि माम् ? प्रभो । स्वामिन् । नाहं त्वया कथमपि परित्यक्तव्या । कान्त । अहं त्वदेकजीवितेव । हृदयवल्लभ । त्वामृते मम जीवनस्य किमस्ति प्रयोजनम् । त्वमेव मे जीवितम् । प्रभो । त्वामनुगन्तुं देहि मे अवसरम् । राजादेश: प्रतिकूल इति ? स्वामिन् । वर्त्तते त्र राज्ञ आदेशदानस्य को पि अधिकार: ? अहं त्वाम् अनुगमिष्याम्येव । किन्तु केन पथा स गत: । (विचिन्त्य) अथवा न, न, स नैव गत: । कथं स शक्नुयाद् दीनां मां परित्यक्तुम् । तस्य तादृक् स्नेह:, अपरिमिता प्रीति:, मदधिगता वाणी, अपूर्व्व: प्रेमा च, एतत् सर्व्वमेव मृषा भविष्यति ? नैवम् भवितुमर्हति । नैवम् भवितुमर्हति । कथमपि स मां न वञ्चयिष्यति । अत्रैव कुत्रापि स प्रच्छन्नस्तिष्ठति । नाथ । क्वासि देहि मे प्रतिवचनम् । दयित । अतीव श्रान्तास्मि । आगच्छ कान्त । पीड़ापि मया अनुभूयते । कथं तथापि नागच्छति प्रियतम: । तर्हि किं सत्यमेव प्रस्थित: स माम् वञ्चयित्वा । (सकरुणं दीर्घं नि:श्वस्य) अथवा किमसम्भाव्यं पुरुषेषु । न जानन्ति ते नारीणां कोमलचित्तवेदनाम् । किं वास्ति प्रयोजनं तेषां तत्परिज्ञानस्य । यतो लतैव वृक्षमाश्रयते, न पुनर्वृक्षो लताम् । अत एव स मां परित्यक्तुमर्हति । भवतु, तेन परित्यक्तापि अहं तमेवानुसरामि । भोस्तरुगनि । कथयत यूयम् । केन पथा गतो मम जीवितेश: । किं न कथयिष्यथ यूयम् । भवतु, वृक्षं तावत् पृच्छामि । (सकरुणं गायति)

क्रमश:-----११

हे वृक्ष । वार्त्ता भरणा मे धवस्य
जानासि पीड़ां पतिहीननार्य्याः ।
हीना त्वया याति लता गतिं यां
स्मृत्वा सखे । स्वीयगतां कथां ताम् ।।

किं त्वमपि मे न प्रतियच्छसि प्रतिवचनम् । अथवा किमत्रास्ति चित्रम् । त्वमप्यसि पुरूष एव । मया भ्रमः कृतः । भवतु प्रियसखीं लतां तावत् पृच्छामि ।

(गायति) कथय लते । सखि । जीवितेशवार्त्तां
भवति तवापि च कोमलांगकान्तिः ।
पतिरहिता कृपणा सुदीनवेषा
समव सखीं पतितां कथां प्रभाष्य ।।

सखि । मम सखि । तरूप्रिये । कथय केन पथा गतं तव सखी-जीवितम् । किम् अनेन पथा ? (सविस्मयं) कथं त्वं न किमपि कथयसि । प्रियसखि । एतत् त्वयि न शोभते । अयि तरूश्रिते । दयितेन तरूणा विरहिता दुःखमुपभुज्यापि न जानासि मम वेदनाम् । अथवा नास्त्यत्रापि किमपि चित्रम् । मिलनसुखरता त्वं कथं वेत्स्यसि मम दुःखम् । भवतु, अहमेव अन्विष्यामि सर्व्वस्वम् । अये । इदम पदचिह्नम् । यावदनुसरामि । (इति प्रस्थिता)

इति पत्यन्वेषणं नाम द्वितीयो कः ।

-----ooo----

तृतीयो कः

रामगिरिः

(तत्रावतिष्ठते विषणावदनो यक्षः)

यक्षः । हा कति दिवसा अतिक्रान्ताः, गणानायामपि ये नायान्ति ।

तथाहि- विविध कुसुमकान्ता डल्लकं शोभयित्वा
विमलकमलहासैरात्महासं प्रकाश्य ।
शिशिरनिचयपातैर्बोधयित्वा गतिं स्वां
धरणिराजनसमीपे स्वागता शारदश्रीः ।।

क्रमशः------१२

अहो । तदा

मम नयनमपात् तन्नायनप्रीतिराशिं
तदमृतमय ओष्ठे लीनमोष्ठं सदासीत् ।
मनसिजपरिभोगं मुक्तवान् मन्मनोजो-
हृदयसकलकाम्यं पूरामासीत् प्रियाया: ।।

अपि च,-अखिलसुखसमृद्धया तृप्तिरासीत् सदा नौ
मिलितमुभयचित्तं वर्त्तते स्मैकवच्च ।
सकलभवनमध्ये प्रेम मूर्त्या सदासीद्
विरहहृदयमध्ये वैरही वेदना च ।।
किन्तु, तत् सुखं न चिरमासीत् ।।
नहि सूर्य्यो वितरति सर्व्वदा किरणां क्षितौ ।
कालक्रमेण भवति सुखं दु:खं सर्वदा ।।

हा ! रवे: प्रकाशशक्तिर्हि मेघेनाब्रियते यथा ।
तथा तत्सुखभुक्तिर्नौ घनाभावेन वारिता ।।

हा भगवन् ! कथमेतद् घनं सृष्टं त्वया ।
यदि न भवति सृष्टा सम्पदेषा त्वया भो: ।
निखिलभुवनमेतद् दु:खहीनं तदा स्यात् ।
घनपरिगतपीड़ा भुज्यते मर्त्यमाप्तै-
रिति तव क्रूरतायाः हश्यते सूचना हा ! ।।

अपि च, यदि न धनयुता दमा, दासता मे कुत: स्यात्
कइह परिमहेत् कम्, क: प्रभुर्व्वा जनस्य ।
प्रभुरिति गणयित्वा शासने कस्य शक्ति-
र्हत कमलवने या वैरहे मे प्रवासे ।।

हा ! निमेषं मामहष्ट्वा या तमसाच्छादितं जगत् ।
मत्वेति सर्व्वत: क्लेशपरिभोगस्य भागिनी ।।

सा इदानीं किमनुतिष्ठति । हा शारदलक्ष्मि । तदानीं त्वं कथमागतासी: ।
यदि त्वं नागता भवे:, तदा कुतो पि मे ईदृशी दशा भविता । यत:,

क्रमश:------१३

तवागतिं विना देवि । कमलस्फोटनं कुत: ।
विना कमलहासञ्च दशा स्यादीदृशी मम ।।

तस्यां शारदवेलायां, प्रिये । दारामपेक्षस्व, अधुनवा-गमिष्यामीति प्रबोध्यागतो हम् । तत: प्रभृति-

हैमन्तिकं समयमेत्य सुदीर्घतापं
प्राप्ता वधूर्विरहिता मम भाग्यदोषात् ।
यातस्तत: परिचित: शिशिरस्तुरैष
यस्मिन् गतं बहुदिनं सततं तयोर्नौ ।।

हा हा । ब वसन्तो पि तया प्राप्त: ।
स्मरसख । कठिनस्ते कीदृशो यं विचारो
विरहदहनदग्धा यत् प्रिया मे त्वयाप्ता ।
वद हतहननाचे शूरता कीदृशी स्या-
दभिमतवपुषस्ते किं दया नास्ति चित्ते ।।

सर्व्वं एव मयि विरूपा अभवन् । नो चेद् य: कामो बन्धुवत् पुरा मम सर्व्वमभिलाषमपूरयत्, सो प्यद्य मयि विरूप: । हा बन्धो ।

स्मर रतिदयित । त्वं बन्धुता या त्वयाप्ता
मम च सुखविधानं कर्त्तुमंगीकृतं वै ।
सुघटितमिह बन्धो । मेलनं प्रीतिदं नौ
वद वद मम कान्त । स्मर्य्यते वाक् तथा सा ।।

हा । कीदृशं मम भाग्यम् ।
व्रजति न तव चित्ते वाङमदीया कथं हा
भवति यदि च वाक्यं चित्तमध्ये मदीयम् ।
कथमिह तव बन्धो । पीड़िता सातिदीना
विकृतकृतिवशान्मे प्रातिकूल्यं तवापि ।।

हा । पत्या विरहिता कान्ता क्लेशमेतं प्रयाति सा ।
मया परिगता देवि । केवलं क्लेशभागिनी ।।

क्रमश:-----१४

हा विधे । त्वमपि मयि विरूप: ।

भुवि भवसि विधे भो: । सागरस्त्वं कृपाया
इति जननिचयै: सकीर्त्यसे तत्क्व तच ।
न भवति खलु सत्यं मन्यते तन्मयाथ
भवति भवति मिथ्या सर्व्वथा वाक्यमेतत् ।।

अपि च, भवसि हतविधे । त्वं सर्व्वत: क्रूर एव
यदि न खलु तथा स्या निर्दयो मे कथं वा ।
स्वयमतिपरिखेदात् खिन्नकान्तिं प्रयाता
दहसि मधुसुदग्धां ग्रीष्मतापै: प्रियां ताम् ।।

अहो । यदि हि पुरुषचित्ते पीड़नं स्यान्ममेत्थं
भवति हृदयपीड़ा कीदृशी मे प्रियाया: ।
किमनुचरति कान्ता कान्तहीना सदा सा
न परिचरति को पि क्लेशदग्धां सुदीनाम् ।।

हा प्रिये । एवं क्लेशमवाप्य त्वं जीविता वा मृतिं गता ।
न जाने मम भाग्यस्य समाप्ति: कुत्र सम्भवेत् ।।

किमनुतिष्ठामि, हा भगवन् । हा । अथवा-
मम वार्त्तां परिज्ञाय जीवितुं शक्नुयात् प्रिया ।
वार्त्तावाही भवेत् को हा हतभाग्यप्रवासिन: ।।

(आकाशं विलोक्य) कथं नवीनो मेघो वेणुहस्तो वृन्दावन-
चन्द्र इव उदेति नभसि । तथाहि-
सर्व्वाकाशो नवजलधरै: पूर्णशोभां हि धत्ते
तापदग्धां रविकिरराजै: प्रायशो मृत्युमाप्ताम् ।
धारापातै: सुखयसि धरां स्नेहवद्भिर्घनेश ।
विश्वाद् दु:खं परिहरसि भो विश्वबन्धुर्यतस्त्वम् ।।

आं, जीवक्लेशं शमयितुमलं त्वामृते को भवेद् वा
दु:खे दु:खी भवति सततं स्नेहशीलो दयार्द्र: ।
तस्माद् बन्धो । भव सकरुणो दीनदीने त्वमद्य
कान्ताहीनो व्यथितहृदय: पीड़ित: सर्व्वतो स्मि ।।
भूमेर्मित्र । त्वमसि मम वै मित्रमेवं सदाद्य
दु:खस्तापैर्विवशहृदया क्लेशमाप्ता प्रिया मे ।
वार्त्ताभावाच्छमनभवने गन्तुकामा प्रियस्य

क्रमश:----१५

वार्त्तावाही भव जलद । मे जीवनाद् बन्धुपत्न्या: ।।
हा जलद । त्वमपि नागच्छसि ।
त्वमपि जलद । देव । त्यक्तवान मां सुदीनम्
यदि न भवसि बन्धो । स्वागतस्त्वं कुतो वा ।
दारााामिह मम चित्ते जीवयित्वा दुराशां
स्वयमपि जलसेकैर्वर्द्धयंस्तां छिनत्सि ।।
भवतु, सर्व्व एव यदि मयि विरूपा भवेयु:, तत् कथं सम्भवति मम जीवनम् । हा भाग्यम् ।

(तत: प्रविशति मेघरूपी कृष्णा:)

मेघरूपी कृष्णा:- (स्वगतम्) अहो । कामिनां कीदृग् विवेकराहित्यम् ।

वार्त्तावाही भवति भुवने चेतनो मानव: क
दौराग्नितेजो निल जलमय: काम्बुवाहो जड़ात्मा ।
मूढ़: कामी विवशहृदयश्चेष्टते दौत्यमस्मिन्
कामार्त्तानां भवति सततं चेतना लुप्तकल्पा ।।
अथवा, किमत्र चित्रम् । सर्व्वेषामेव ईदृशी दशा सम्भवति ।

जाने दु:खं विरहिहृदिजं पूर्व्वबोधान्ममैव
वृन्दारराये व्रजकुलवधूप्रेमबद्ध: पुराहम् ।
कीदृग् ज्वाला हृदयमभित: सृतासीत् तदा मे
तस्या: प्राप्त्यै किमिह न कृतं चिन्तितं वा मयापि ।।

अपि च, सीताशून्यं मम च भवनं राममूर्त्तौ विलोक्य
सर्व्वं शून्यं भुवनमभितो दृष्ट्वा शून्यचित्त: ।
वार्त्तां तस्या: कठिनघरराशिं पृष्टवान् मोहमग्न-
स्तस्मिन्नद्रौ बहुपरिचिते स्मर्य्यते तत्कथाद्य ।।

अहो । यदि भवति दशेयं विश्वहेतोर्ममापि
कथमिह भविता वा मायया मुग्धबुद्धे: ।
सकरुणहृदयो हं चिन्तयित्वा कथां तां
स्वयमित इह यदां दौत्यहेतोर्हि तस्य ।।

क्रमश:------१६

यक्ष: । पतिप्रवचिते ।

विसंज्ञापि मया त्यक्ता पापिना सर्व्वत: प्रिये !!
सर्व्वस्वं मे समर्प्यापि किचिन्न प्राप्यते त्वया ।।

हा हतभाग्ये । सुस्नेहेतोगले माला या त्वया संधृता मुदा ।
तन्मालया फणीभूय हृदयं दश्यते तव ।।

तपस्विनि । स्वकर्म्मफलं प्राप्नुहि त्वम् । दासस्य मे नास्ति किमपि कर्त्तव्यम् ।

मेघरूपी कृष्ण:-(स्वगतम्) अहो । अपूर्व्वम् । स्वयं प्रदाहदग्धस्यापि नास्ति आत्मने एकशो पि चिन्ता । भो यक्ष । त्वमेव प्रेमाधार: ।

यक्ष: । आं, यदि मम प्राणा प्रियैव प्राणहीना भविष्यति, तदा ममापि प्राणै: किमस्ति प्रयोजनम् । भवतु, अहमपि अस्माद् गिरि-शृङ्गाद् जीवितमिदं नाशयिष्यामि । (तथा कर्तुं चेष्टते)

मेघरूपी कृष्ण:- मा मा तावद् भो: । (इति निवारयति)

यक्ष: । आ:, को मां वारयति । मुच, मुच माम् ।
प्रिया मे जीवहीना स्यात् कथं जीवाम्यहं पुन: ।
सर्व्वस्वमर्पयित्वा सा केवलं वचनं गता ।।

मेघरूपी कृष्ण:- सखे । न जीवहीना ते प्रिया ।

यक्ष:- आं, केन कथितेयममृतमयी वाणी । भो: । को भवान् ।

मेघरूपी कृष्ण:- अहं तव सखास्मि ।

यक्ष: । (विलोक्य) अये ।
जलद सकरुणास्त्वं प्राप्तवान् मां सुदीनं
कथमिह न गत: स्या: पुष्करारामपत्य ।।
भवति महति वंशे सूच्चचेता: प्रजात:
सततमभिरत: स्याद् दीनदु:खप्रपूर्त्तौ ।।

सखे । आगच्छ ।
कूटजकुसुममेतद् गृह्यतां भो: सुवेष ।
वद वद मम वन्धो । जीविता सातिदीना ।

क्रमश:------१७

मेघरूपी कृष्ण: । श्रृणु तव दयितायां वाचमेतां प्रिया भो
भवति च तव कान्ता जीविता त्वत्कृते च ।।

यक्ष: । सत्यं भरासि, जीवति मे प्रिया ।

मेघरूपी कृष्ण: । अथ किम्, सा जीवत्येव ।

यक्ष: । सखे । किमनुतिष्ठति सा ।

मेघरूपी कृष्ण: अनुष्ठानस्य योग्यत्वं कथं तस्या भवेत् सखे । ।
ध्यानमग्ना सदा सास्ते दिनसंख्यानतत्परा ।।

अपि च, वान्तं वायुं प्रियाकाशे पृच्छति त्वत्कथां प्रिय ।।
सन्देशार्थं सदोत्कण्ठा मृतप्रायावतिष्ठते ।।

यक्ष: । हा मुग्धे । त्वमीदृशीमवस्थां गतासि ।

(इति चिन्तां नाटयति )

मेघरूपी कृष्ण: । (स्वगतम्) अहो । अयं स एव यक्ष: ।

दिव्य । दीप्तिर्विकसिति सदा यस्य देहात् समन्ता-
न्मग्नश्चासीद् विषयनिचये सर्वदा यो विलासे ।
यक्ष: सो यं सकलरहितो दैन्यमाप्त: कृशच
चिन्तामग्नो बलयरहितो रिक्तहस्त: प्रियायै ।।

यक्ष: बन्धो । यदि त्वं कृपापरवश आगतस्तर्हि मम जीवनं रक्ष ।

मेघरूपी कृष्ण: । सखे । किं कर्त्तव्यम् ।

यक्ष: महानुभव ।

वार्तां तावद् वह जलधर । प्राणहेतो: प्रियाया
दौत्ये भ्रातर्नहि कुरु घृणां तत्कृतं माधवेन ।
माहात्म्यात्वं कृत इह मया, प्रार्थनां पूरय त्वं
नो चेद् बन्धो । यमगृहगता बन्धुजाया भवेच्च ।।

मेघरूपी कृष्ण: । सख । मैवं ब्रूहि ।

सखेति कथयित्वा मां कथमेवं ब्रवीषि भो: ।।
बन्धवे किं न कर्त्तव्यं बन्धुना धरणौ सखे । ।।

क्रमश:-------१८

अपि च प्रियसख ।

दौत्यं तुच्छं भवति दयित । त्वत्कृते स्यां धरायां
प्राणाः स्निग्धं यदि च भविता कार्यमेतत् त्वदीयम् ।
कर्त्तव्यं मे तदपि धरणौ सर्व्वदा सर्वथैव
तस्मान्मार्गं कथयतु भवान् वासदेशस्य बन्धो । ।।

यक्षः । विश्वबन्धो । एतत् त्वय्येवोपपद्यते । श्रूयताम्-
मार्गे क्लेशो न भवति सखे । ह्युत्तराशां प्रयाहि
प्रीतिस्ते स्यात् प्रकृतिसुलभैः शोभनीयैः सुदृश्यैः ।
वक्रः पन्था यदि च भविता तूज्जयिनीं च गच्छ
शान्तं सौम्यं प्रणाम गिरिशं विश्वकल्याणहेतुम् ।।

मेघरूपी कृष्णः । सखे ।

एषो हं तत्र गच्छामि प्रीत्यर्थं तव सुप्रिय ।।
तव हेतोश्च चद्गुर्में प्रीतिमाप्नोत्यनुत्तमाम् ।।
किन्तु बन्धो । गत्वा किं वक्तव्यम् ।

यक्षः । प्रियसख ।
मद्गतं कुशलं वाक्यं ब्रूतं तस्यै प्रणाष्य भोः ।।
रक्ष्यतां जीवनं तस्या इति मे प्रार्थना त्वयि ।।

मेघरूपी कृष्णः । सखे । तथैव करिष्यामि ।

यक्षः । बन्धो । यद्येवमनुगृह्वासि माम्, तर्हि गलं कालक्षेपेण ।
यतो निमेषमपि तस्या युगायते ।

मेघरूपी कृष्णः वाढं, एव एषो हं गच्छामि । (निष्क्रान्तः)
इति दूतप्रेषणं नाम तृतीयो ङ्कः ।

क्रमशः----१९

-----o------

मेघदूतम्

निबन्धकः-श्रीनित्यानन्दस्मृतितीर्थः

(पूर्वानुवृत्तम्)

चतुर्थोऽङ्कः प्रथमदृश्यम्

उज्जयिनीराजपथः । |

(ततः प्रविशन्ति गायन्तः स्त्री-पुरुषाः)

स्त्रियः:- नवविलसितशोभैः शोभदेह ।
नवलिसविधानैश्चित्तचोर ।
मनसिजपरिखेदाद्दग्धगात्र ।
हृदयमभित एहि प्रीतिपात्र । ।।
नवनवभावैर्भावविकाशैः
कथय कथां मोहिचत्तविलासां
घर घर मालां पुष्पविशालां
प्रियतम । जायां ते नय वक्षः ।।

पुरुषाः:- अधरसुधां ते देहि सुकान्ते ।
व्यपनय पत्युश्चित्तजदाहम् ।
मदनविदग्धं क्लान्तमिमं भोः ।
कुसुमकरस्ते वक्षसि रक्षः ।।

(निष्क्रान्ताः सर्व्वे)

(ततः प्रविशति मेघरूपी कृष्णः)

मेघरूपी कृष्णः: अये । इयमेव सा उज्जयिनी, यस्या वार्त्ता विशेषेण कथिता तेन यक्षेण । अहो । आश्चर्य्यं सौन्दर्य्यम् । यद्दर्शनेनैव चित्तमाकृष्टं भवति । तथाहि-

चित्रे न्यस्तं यदि च भविता दृश्यमस्यास्तथैव
सर्व्वं गेहं भवति सततं दृश्यतश्चैकरूपम् ।
उच्चैर्गेहं गिरिनृपसमं भासते स्यां सदैव
वायुश्चायं कुसुमनिचयाद् गन्धमाहृत्य वाति ।।

अपिच-

न भवति खलु दुःखं लेशतो स्यां जनानां
सकलहृदयकामः पूर्य्यते स्यां तथाहि ।
सुखरविरिह भाति प्रीतिदः सर्व्वदैव
नहि भवति विहीना भूमिरेषा च तेन

क्रमशः----- २०

आं, रात्रिरतीता । तथाहि-

देव: सूर्यो भुवनमभितो भासते दिव्यकान्त्या
रक्तो रागो विकसति सदा तस्य देहात् समन्तात् ।
यस्य स्पर्शाद् भवति सकलं शुद्धिमद् द्रव्यमस्मिन्
सप्ताश्वो यं भुवि भुवि गत: पूज्यते भूमिलोकै: ।।

आं, देवस्य स्पर्शाद् नवानुभूतिरद्य मयानुभूते महाकाल-
दर्शनेच्छा च जायते चेतसि । कथं वा न भवेत् । यत:-
साधुभि: स्नातो जीवश्चित्तदोषं विमुचति ।
लभते साधुभावच शक्तिरेषा सतां मता ।।

भवतु, यावद् विश्वेशगृहमेव गच्छामि ।

(निष्क्रान्त:)

-----०-----

द्वितीयदृश्यम्

उज्जयिन्यां महाकालमन्दिरम्

(देवस्यारात्रिकमनुष्ठीयते । देवदास्यो नृत्यन्ति गायन्ति च )

(गीतम्)

जयति जयति शम्भु: शंकरो विश्वनाथो
जयति जयति कान्त: कान्तिकान्तो भवान्या: ।
भुवनघटनकारी पाति यो विश्वमेत-
द्धरति च परिशेषे विश्वमूर्त्ति: स्वयन्तत् ।।
भवति भवविधाता विश्वहेतु: शिवो वै
धरतु कुसुममाल्यं स्वीयकण्ठे हिमाल: ।
वितरतु भुवनेषु ज्ञानदश्चात्मबोधम
तरतु भवपयोधिं मानवस्तत्तरराया ।।
गृहाण शंकरास्माभि: प्रणामं भक्तित: कृतम् ।
देहि प्रीतो भिक्षां न: सर्व्वदाता शुभप्रद: ।।

(सर्व्वा निष्क्रान्ता: )

(तत: प्रविशति मेघरूपी कृष्णा:)

क्रमश:---२१

मेघरूपी कृष्ण:- देवादिदेव शङ्कर । त्वमत्राधिष्ठितो सि । अहो । स्वप्रभावेण सर्व्वान् उज्जयिनीवासिनो दु:खहीनान् प्रकुर्व्वन् सुखभोगिन: कृत्वा पालयसि सयत्नम् । भगवन् । भक्त-हेतोस्तव किमकर्त्तव्यं वर्त्तते ? किं न कृतं त्वया भक्तेभ्य: विश्वपूज्य । त्वया विना को वा शक्नुयादेवं भक्तान् परि-पालयितुम् । महाकाल । त्वमसि महाकाल एव पृथिव्याम् । तत्, प्रभो । सर्व्वनियन्त: । गृहाण ममाप्यभिवादनम् । भो यक्ष । त्वया दौत्ये वृतेन सौभाग्यमेव लब्धं मया । यदि त्वया वृतो नाभविष्यम्, तर्हि कुत: प्राप्स्यामीदृशं सौभाग्यम् । यदि त्वमुपेक्षितो भविष्य:, तर्हि अहमेव वञ्चितो भविष्यम् ईदृक् सौभाग्यलाभे । अहो ।

याचकार्थं प्रसाध्यात्र स्वयं स्याल्लाभवान् क्षितौ ।
भ्रान्तिस्तत्र विचिन्त्येत मूढैरेव हि केवलम् ।।

भगवन । कीदृगपूर्व्वं ते सौन्दर्य्यम् । नयनाभिराम ।

पश्यतो नैव निर्वृत्ता कामना मे कथचन:
दर्शनीयापरूपस्य भूयो पीच्छा प्रजायते ।।

सर्व्वशक्तिमन् । गौरीपते । सर्व्वदा सर्व्व एव अजानन्तो पि सर्व्वात्मानं त्वामेव पूजयन्ति । यत:-

सर्व्वात्मक । त्वमेको सि नास्ति भेदो हि कंचन ।
मूढा भेदं प्रजानन्तो धरायां दु:खभोगिन: ।।

दीनबन्धो । यक्षो विरहितो तीव्र क्लेशमापन्न: । तत्, तत्कृत्य सम्पादनायानुमतिर्दीयताम् । कालक्षेपे तत्प्रियायाश्चापी-जीवितमपि संशयापन्नं भविष्यति । तस्मादनतिक्रमनीये पि त्वयि अतिक्रामामि त्वाम् ।

(इति निष्क्रान्त:)

(इति उज्जयिनीभ्रमणं नाम चतुर्थो क:)

------o-----

क्रमश:-----२२

भगवन् ।

सुखी मे तादृश: कान्त: प्रवासी च प्रियां विना ।
हीनकान्तिर्भवेत् सो ऽ च कथमेतत्तु सहे वद ।।

हा !

तादृशं दु:खमापन्नो जीवितो ऽसि स मे प्रियम् ।
जीवनाशा कथं तस्य कर्त्तव्या वा विमूढया ।।

किं सत्यमेव मम जीवितनाथो मां चिराय परित्यक्तवान् ।

अथवा को ऽत्र संशय: ।

जीविते जीविताधीशे सन्देशं स हरेत् प्रियम् ।
सन्देशं मे परिज्ञाय नैव तिष्ठेत् कथंचन ।।

आं, कियन्ति दिनानि अतीतानि, किन्तु सकृदपि तस्य सम्भाषणां न श्रुतम् । हा । मम दयितस्य तादृशं मधुरभाषणां न पुन: श्रोष्यामि । तस्य तन्मनोहारि रूपं न द्रक्ष्यति मे चक्षु: । प्रभो । स्वामिन् । किमपराद्धं मया, यतो मां परित्यजसि ।

यदि स्वामी न वर्त्तेत जीवितै: किं प्रयोजनम् ।
प्राणहीनं शवं मर्त्यै कस्य प्रीतिं करोत्यहो ।।

तर्हि, किं मया कर्त्तव्यम् ।

(इति करूणं विलपति ।)

(तत: प्रविशति मेघरूपी कृष्ण:)

मेघरूपी कृष्ण:- अये । एषा सा अलका । यत्र केवलं सर्व्वत्र स्वाश्चर्य्यं परिदृश्यते । तथाहि-

धनपतिपुरमेतद्दृश्यते पूर्णशोभं
वयसि पुरजने ऽस्मिन् केवलं यौवनं हि ।
न खलु भवति दु:खं पुष्पचापाहते ऽत्र
धनजनसुखपूर्णं सर्व्वमेहच दृष्टम् ।।

अपि च-

लीलापद्मं करकमलयो: कुन्तले कुन्दपुष्पं
चूडापाशे नवकुरुबकं केशवीथ्यां कदम्बम् ।
स्त्रीणां वक्त्रे तिलककुसुमं श्रोत्रयुग्मे शिरीष-
मित्थं सर्वेधनपतिपुरं शोभितं दृष्टमथ ।।

क्रमश:----२४

यक्षपत्नी- जीवितनाथेन विना जीवितेन मे किं प्रयोजनम् । तर्हि जीवितमेव त्यजामि ।

मेघरूपी कृष्णः अहो । एषा सा यक्षदयिता ।

या पत्युर्व्वियुक्ता धरराजगणे गर्व्विता मानिनी च
या सौख्यैः पूर्णचित्ता सततमभिरता प्रीतियुक्ता सखीभिः ।
प्राप्तं कार्श्यं समग्रं निखिलमवरं यक्षपत्न्या ययात्र
सा कालाधीनतायाः पतितहृदया वैरहं दुःखमाप्ता ।।

यक्षपत्नी- किन्तु जीविते स्मिन् परित्यक्ते यदि नाथ आगच्छेत्, तदा मामदृष्ट्वा निश्चितमेव सो पि जीवनं परित्यक्ष्यति । तत्, किं करोमि । हा भगवन् ।

वार्त्ता तस्य परिज्ञाता भविता यदि मे प्रभो ।
तदर्थं जीवितवैतद् धर्तुमर्हामि यत्नतः ।।

हा भगवन् ! अकरुणेन त्वया कथमपि वार्त्तापि तस्य न परिज्ञाप्यते ।

( इति सकरुणं रोदिति )

मेघरूपी कृष्णः- (उपसृत्य) प्रियसखि । नाधिकं दुःखं कार्य्यम् ।

यक्षपत्नी- को भवान् ?

मेघरूपी कृष्णः- अहं तव पत्युः सखास्मि ।

यक्षपत्नी- किं मम भर्त्तृबन्धुर्भवान् ?

मेघरूपी कृष्णः- अथ किम् ।

यक्षपत्नी- यद्येवम्, तर्हि किं ज्ञायते भवता भवद्बन्धुसन्देशः ।

मेघरूपी कृष्णः- ज्ञायते । स जीवित आस्ते ।

यक्षपत्नी- कृपया कथ्यताम्, कीदृशी दशा सञ्जाता तस्य तपस्विनः ।

मेघरूपी कृष्णः- श्रूयताम् ।

पत्न्या हीनो विवशहृदयो दीनभावं प्रपन्न-
श्चिन्तामग्नः स्वकरकमले मस्तकं स्थापयित्वा ।
शोकैर्दुःखैर्मथितमनसस्तस्य देहं कृशञ्च
तादृक् कान्तिर्न हि विकसिता विग्रहात्तस्य बन्धोः ।।

क्रमशः-----२५

यक्षपत्नी- हा विधे । एतदपि मम श्रोतव्यमासीत् । अधुना किं चेष्टते स मे प्रियतम: ।

मेघरूपी कृष्णा:- श्रूयताम् ।

एवं क्लेशैर्व्यथितमनसो जीविते नास्ति सक्ति-
र्जीवस्यार्थे तव च सततं जीवितो वर्तते स: ।
नान्या चिन्ता विशति हृदये चिन्त्यते त्वत्कथैव
सन्देशार्थं तव च सविधे प्रेरितो हं प्रियेणा ।।

यक्षपत्नी- हा मम प्रियतम ।

स्वयं क्लेशमवाप्यापि चिन्त्यते मत्कृते सदा ।
त्वय्येव युज्यते नाथ । त्वदृते कुत्र सम्भव: ।।

अथ किमुक्तवान् अस्यै दीनायै ।

मेघरूपी कृष्णा:- श्रूयताम् ।

अष्टौ मासा अति सुकठिना: स्मता हा त्वयैव
क्लेशै: क्लिष्टा कमलसदृशी कोमला जीविता तु ।
जीवस्तिष्ठेद् यदि तव कथं जीव्यतां शेषमासा-
नेषा याचे तव च सविधे साध्यते मत्कृते च ।।

यक्षपत्नी-हा नाथ ।

अहं तिष्ठामि गेहे त्वं प्रवासं प्राप्तवानसि ।
तथापि चिन्त्यते मह्यम् कृपणा ते कथं मयि ।।

मेघरूपी कृष्णा:- प्रियसखि । अथ किं कथनीय: स तपस्वी ।

यक्षपत्नी- एवं कथ्यताम् ।

तवैवार्थे प्रिय । प्राणा ध्रियन्ते तव कान्तया ।
तव मार्गं प्रपश्यन्त्या दास्या ते पेद्यते सदा ।।

मेघरूपी कृष्णा:- तदेव कथयिष्यामि तस्मै । अन्यत् किन्ते प्रिय-मुपहरामि ।

यक्षपत्नी- देव ।

अन्यत् काम्यं किमिह भविता त्वत्सकाशे ममाद्य
दु:खित्राणा । प्रियविरहिता वैरहं दु:खमाप्ता ।

क्रमश:---२६

याच् तस्मात् तव च सविधे साध्यते विश्वमित्र ।
दु:खं सर्व्वं विरहिमनस: सर्व्वदा नाशयेति ।।

मेघरूपी कृष्णा:- बाढम् । अपि च देवि ।

(भरतवाक्यम्)

शस्यै: पूर्णा भवतु धरणी मेघजालैर्जलाढ्य-
र्मोहै: शून्या बुधपरिवृता सम्पदा शोभिता च ।
गोभि: पूर्णा भवशिवकरैर्ब्रह्मनिष्ठैश्च विप्रै-
र्भद्रं सर्व्वं भवतु धरणी प्रेमशक्त्या तवैव ।।
(इति यक्षसन्देशप्रदानं नाम पचमो क:)

समाप्तमिदं नाटकम्

---000---